# ॥ महान्यासः ॥

अथ पंचागंरुद्राणां न्यासपूर्वकं जपहोमार्चनाभिषेक विधिं वयारव्यास्यामः ॥

नमस्ते रुद्र मन्यव उतोत इषवे नमः ।
नमस्ते अस्तु धन्वने बाहुभ्यामुत ते नमः ॥
या त इषुः शिवतमा शिवम् बभूव ते धनुः ।
शिवा शरव्या या तव तया नो रुद्र मृडय ॥

**(EAST)**

कं खं गं घं ङं. । यरलवशषसहों । ॐ नमो भगवते रुद्राय । **पूर्वांगं** रुद्राय नमः ॥

अपैतु मृत्यु-रमृतन्न आगन्वैवस्वतो नो अभयं कृणोतु ।
पर्णं वनस्पतेरिवाभिनश्शीयतां रयिस्स चतान्नः शचीपतिः ।

**(SOUTH)**

चं छं जं झं ञं । यरलवशषसहों । ॐ नमो भगवते रुद्राय । **दक्षिणांग** रुद्राय नमः ॥

ॐ । निधनपतये नमः । निधनपतान्तिकाय नमः ।
ऊर्ध्वाय नमः । ऊर्ध्व लिङ्गाय नमः । हिरण्याय नमः । हिरण्य लिङ्गाय नमः ।
सुवर्णाय नमः । सुवर्ण लिङ्गाय नमः । दिव्याय नमः । दिव्य लिङ्गाय नमः ।
भवाय नमः । भव लिङ्गाय नमः । शर्वाय नमः । शर्व लिङ्गाय नमः ।
शिवाय नमः । शिव लिङ्गाय नमः । ज्वलाय नमः । ज्वल लिङ्गाय नमः ।

आत्माय नमः। आत्म लिङ्गाय नमः। परमाय नमः। परम लिङ्गाय नमः।

एतत्सोमस्य सूर्यस्य सर्वलिङ्गग स्थापयति पाणिमन्त्रं पवित्रं।

**(WEST)**

टं ठं डं ढं णं। यरलवशषसहों। ॐ नमो भगवते रुद्राय। **पश्चिमांग** रुद्राय नमः॥

यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाऽऽविवेश

तस्मै रुद्राय नमो अस्तु॥

**(NORTH)**

तं थं दं धं नं। यरलवशषसहों। ॐ नमो भगवते रुद्राय। **उत्तरांग** रुद्राय नमः॥

प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकः। तेनान्नेनाप्यायस्व॥

नमो रुद्राय विष्णवे मृत्युर्मे पाहि।

पं फं बं भं मं। यरलवशषसहों। ॐ नमो भगवते रुद्राय। **ऊर्ध्वांग** रुद्राय नमः॥

---

तत्पुरुषाय विद्महे महादेवाय धीमहि। तन्नो रुद्रः प्रचोदयात्॥

संवर्ताग्नि तटित्प्रदीप्त कनकप्रस्पर्धि तेजोरुणं

गम्भीरध्वनि सामवेदजनकं ताम्राधरं सुन्दरम्।

अर्धेन्दुद्युति लोल पिंगल जटा भार प्रबोद्धोदकं

वन्दे सिद्धसुरासुरेन्द्र नमितं **पूर्वं** मुखं शूलिनः॥

ॐ नमो भगवते रुद्राय। **पूर्वांगं** मुखाय नमः॥ **(EAST)**

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ।
सर्वेभ्यस्सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥

कालाभ्र भ्रमारांजन द्युतिनिभं व्यावृत्तपिंगेक्षणं
कर्णोद्भासित भोगिमस्तकमणि प्रोद्भिन्नदंष्ट्रांकुरम् ।
सर्पप्रोतकपाल शुक्तिशकल व्याकीर्णताशेखरं
वन्दे **दक्षिण**मीश्वरस्य वदनं चाथर्वनादोदयम् ॥

ॐ नमो भगवते रुद्राय । **दक्षिणांग** मुखाय नमः ॥ **(SOUTH)**

सद्योजातं प्रपद्यामि सद्यो जाताय वै नमो नमः ।
भवे भवे नाति भवे भवस्व मां । भवोद्भवाय नमः ॥

प्रालेयाचल मिन्दुकुन्द धवलं गोक्षीरफेनप्रभं
भस्माभ्यंगमनंगदेहदहन ज्वाला वलीलोचनम्
विष्णु ब्रह्म मरुद् गणार्चितपदं ऋग्वेदनादोदयं
वन्देऽहं सकलं कलंकरहितं स्थाणोर्मुखं **पश्चिमम्** ॥

ॐ नमो भगवते रुद्राय । **पश्चिमांग** मुखाय नमः ॥ **(WEST)**

वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः
कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय
नमस्सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥

गौरं कुंकुम पंकितं सुतिलकं व्यापाण्डुमण्डस्थलं

भ्रूविक्षेप कटाक्षवीक्षण लसत्सं सक्तकर्णोत्पलम् ।

स्निग्धं बिम्बफलाधरं प्रहसितं नीलाल कालंकृतं

वन्दे याजुष वेदघोषजनकं वक्त्रं हरस्योत्तरम् ॥

ॐ नमो भगवते रुद्राय । **उत्तरांग** मुखाय नमः ॥ **(NORTH)**

ईशानस्सर्व विद्याना - मीश्वरस्सर्व भूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥

व्यक्ताव्यक्तनिरूपितं च परमं षट्त्रिंशतत्वाधिकं

तस्मादुत्तर तत्वमक्षरमिति ध्येयं सदा योगिभिः ।

ओंकारादि समस्तमन्त्रजनकं सूक्ष्मातिसूक्ष्मं परं

वन्दे पंचम-मीश्वरस्य वदनं ख-व्यापि तेजोमयम् ॥

ॐ नमो भगवते रुद्राय । **ऊर्ध्वांग** मुखाय नमः ॥ **(HEAVENWARDS)**

---

या ते रुद्र शिवा तनूरघोराऽपापकाशिनी ।

तया नस्तनुवा शन्तमया गिरिशन्ताभिचाकशीहि ॥ शिखायै नमः ॥ **(TUFT)**

अस्मिन् महत्यर्णवेऽन्तरिक्षे भवा अधि ।

तेषाꣳ सहस्रयोजनेऽवधन्वानि तन्मसि ॥ शिरसे नमः ॥ **(TOP OF HEAD)**

सहस्राणि सहस्रशो ये रुद्रा अधि भूम्याम् ।
तेषाꣳ सहस्रयोजनेऽवधन्वानि तन्मसि ॥ ललाटाय नमः ॥ **(FOREHEAD)**

हꣳसश् शुचिषद् -वसुरन्त-रिक्षसद्-धोता वेदिष-दतिथिर्-दुरोणसत् ।
नृषद् वरसदृतसद् व्यो मसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ भ्रुवोर्मध्याय नमः ॥ **(MIDDLE OF EYEBROWS)**

त्र्यंबकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्यो-र्मुक्षीय माऽमृतात् ॥ नेत्राभ्यां नमः ॥ **(EYES)**

नमः स्रुत्याय च पथ्याय च नमः काट्याय च नीप्याय च नमः सूद्याय च सरस्याय
च नमो नाद्याय च वैशन्ताय च ॥ कर्णाभ्यां नमः ॥ **(EARS)**

मानस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान्मा नो रुद्र भामितोऽवधी-र्हविष्मन्तो नमसा विधेम ते ॥ नासिकाभ्यां नमः ॥ **(NOSE)**

अवतत्य धनुस्तवꣳ सहस्राक्ष शतेषुधे ।
निशीर्य शल्यानां मुखा शिवो नः सुमना भव ॥ मुखाय नमः ॥ **(FACE)**

नीलग्रीवाः शितिकण्ठाः शर्वा अधः क्षमाचराः ।
तेषाꣳ सहस्रयोजनेऽवधन्वानि तन्मसि ॥ कण्ठाय नमः ॥ **(THROAT)**

नीलग्रीवाः शितिकण्ठा दिवꣳ रुद्रा उपश्रिताः ।
तेषाꣳ सहस्रयोजनेऽवधन्वानि तन्मसि ॥ उपकण्ठाय नमः ॥ **(LOWER NECK)**

नमस्ते अस्त्वायुधायानातताय धृष्णवे
उभाभ्यामुत ते नमो बाहुभ्याम् तव धन्वने ॥ बाहुभ्यां नमः ॥ **(SHOULDERS)**

या ते हेतिर्मीढुष्टम हस्ते बभूव ते धनुः ।
तयाऽस्मान् विश्वतस्त्वमयक्ष्मया परिब्भुज ॥ उपबाहुभ्यां नमः ॥ **(ELBOW TO WRIST)**

परिणो रुद्रस्य हेतिर्वृणक्तु परि त्वेषस्य दुर्मतिरघायोः ।
अव स्थिरा मघवद्भ्यस्तनुष्व मीढ्वस्तोकाय तनयाय मृडय ॥ मणिबन्धाभ्यां नमः ॥
**(WRISTS)**

ये तीर्थानि प्रचरन्ति सृकावन्तो निषङ्गिणः ।
तेषाꣳ सहस्रयोजनेऽवधन्वानि तन्मसि ॥ हस्ताभ्यां नमः ॥ **(HANDS)**

सद्योजातं प्रपद्यामि सद्यो जाताय वै नमो नमः ।
भवे भवे नाति भवे भवस्व मां । भवोद्भवाय नमः ॥ अंगुष्ठाभ्यां नमः ॥
**(ROLL RING FINGERS ON THUMBS OF EACH HAND)**

वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः
कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय
नमस्सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ तर्जनीभ्यां नमः ॥
**(ROLL THUMBS ON RING FINGERS OF BOTH HANDS)**

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ।

सर्वेभ्यस्सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ मध्यमाभ्यां नमः ॥

**(ROLL THUMBS ON MIDDLE FINGERS OF BOTH HANDS)**

तत्पुरुषाय विद्महे महादेवाय धीमहि ।

तन्नो रुद्रः प्रचोदयात् ॥ अनामिकाभ्यां नमः ॥

**(ROLL THUMBS ON RING FINGERS OF BOTH HANDS)**

ईशानस्सर्व विद्याना - मीश्वरस्सर्व भूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोम् ॥ कनिष्ठिकाभ्यां नमः ॥

**(ROLL THUMBS ON LITTLE FINGERS OF BOTH HANDS)**

नमो हिरण्यबाहवे हिरण्यवर्णाय हिरण्यरूपाय हिरण्यपतयेऽम्बिकापतय उमापतये पशुपतये नमो नमः ॥ करतल करपृष्ठाभ्यां नमः ॥

**(RUB EACH PALM OVER OTHER, ONE AFTER ANOTHER, ON THE FRONT AND THE BACK)**

नमो वः किरिकेभ्यो देवानाꣳ हृदयेभ्यः ॥ हृदयाय नमः ॥ **(TOUCH HEART)**

नमो गणेभ्यो गणपतिभ्यश्च वो नमः ॥ पृष्ठाय नमः ॥ **(TOUCH BACK)**

नम स्तक्षभ्यो रथकारेभ्यश्च वो नमः ॥ कक्षाभ्यां नमः ॥ **(ARMPIT TO WAIST)**

नमो हिरण्यबाहवे सेनान्ये दिशां च पतये नमः ॥ पार्श्वाभ्यां नमः ॥ **(TRUNK)**

विज्यं धनुः कपर्दिनो विशल्यो बाणवा॑ँ उत ।
अनेशन्नस्येषव आभुरस्य निषङ्गथिः ॥ जठराय नमः ॥ **(STOMACH)**

हिरण्यगर्भस्समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
सदाधार पृथिवीम्द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ नाभ्यै नमः ॥ **(NAVEL)**

मीढुष्टम शिवतम शिवो नः सुमना भव ।
परमे वृक्ष आयुधन्निधाय कृत्तिं वसान आचर पिनाकं बिभ्रदागहि ॥ कठ्यै नमः ॥ **(WAIST)**

ये भूतानामधिपतयो विशिखासः कपर्दिनः ।
तेषा॑ँ सहस्रयोजनेऽवधन्वानि तन्मसि ॥ गुह्याय नमः ॥ **(UPPER REPRODUCTIVE ORGANS)**

ये अन्नेषु विविध्यन्ति पात्रेषु पिबतो जनान् ।
तेषा॑ँ सहस्रयोजनेऽवधन्वानि तन्मसि ॥ अण्डाभ्यां नमः ॥**(LOWER REPRODUCTIVE ORGANS)**

स शिरा जातवेदा अक्षरं परमं पदम् ।
वेदाना॑ँशिरसि माता आयुष्मन्तं करोतु माम् ॥ अपानाय नमः ॥ **(ANUS)**

मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्त-मुत मा न उक्षितम् ।
मा नोऽवधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषः ॥ ऊरुभ्यां नमः ॥
**(THIGHS)**

एष ते रुद्रभागस्तञ्जुषस्व तेनावसेन परो मूजवतोऽती-ह्यवततधन्वा पिनाकहस्तः
कृत्तिवासाः ॥ जानुभ्यां नमः ॥ **(KNEES)**

सꣳसृष्टजित्सोमपा बाहुशध्यूर्ध्वधन्वा प्रतिहिताभिरस्ता ।
बृहस्पते परिदीया रथेन रक्षोहाऽमित्राꣳ अपबाधमानः ॥ जंघाभ्यां नमः ॥ **(KNEE TO ANKLES)**

विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् ।
सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु ॥ गुल्फाभ्यां नमः ॥ **(ANKLES)**

ये पथां पथिरक्षय ऐलबृदा यव्युधः ।
तेषाꣳ सहस्रयोजनेऽवधन्वानि तन्मसि ॥ पादाभ्यां नमः ॥ **(FEET)**

अध्यवोचदधिवक्ता प्रथमो दैव्यो भिषक् ।
अहीꣳश्च सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः ॥ कवचाय हुम् ॥
**(CROSS HANDS ACROSS CHEST WITH TIPS OF FINGERS TOUCHING SHOULDERS)**

नमो बिल्मिने च कवचिने च नमः श्रुताय च श्रुतसेनाय च ॥ उपकवचाय हुम् ॥
**(DOING "KAVACHA" AT THE ELBOW LEVEL)**

नमो अस्तु नीलग्रीवाय सहस्राक्षाय मीढुषे ।
अथो ये अस्य सत्वानोऽहं तेभ्योऽकरन् नमः ॥ नेत्रत्रयाय वौषट् ॥
**(TOUCH INDEX, MIDDLE, RING FINGERSACROSS THE 3 EYES;MIDDLE FINGER WILL BE BETWEEN THE EYEBROWS)**

प्रमुञ्च धन्वनस्त्व-मुभयोरार्त्नियोर्ज्याम् ।
याश्च ते हस्त इषवः परा ता भगवो वप ॥ अस्त्राय फट् ॥
**(SLAP INDEXAND MIDDLE FINGERS OF RIGHT HAND ON LEFT PALM)**

य एतावन्तश्च भूयाꣳसश्च दिशो रुद्रा वितस्थिरे ।
तेषाꣳ सहस्र-योजनेऽवधन्वानि तन्मसि ॥ इति दिग्बन्धः ॥
**(SNAP MIDDLE AND THUMB WITH CLICKING SOUNDS AROUND SELF)**

---

ॐ मूर्ध्ने नमः । नं नासिकाय नमः । मों ललाटाय नमः । भं मुखाय नमः ।

गं कण्ठाय नमः । वं हृदयाय नमः । तें दक्षिण हस्ताय नमः ।

रुं वामहस्ताय नमः । द्रां नाभ्यै नमः । यं पादाभ्यां नमः ।

सद्योजातं प्रपद्यामि सद्यो जाताय वै नमो नमः ।
भवे भवे नाति भवे भवस्व मां । भवोद्भवाय नमः ॥ पादाभ्यां नमः ॥

वामदेवाय नमो ज्येष्ठाय नमः श्रेष्ठाय नमो रुद्राय नमः कालाय नमः
कलविकरणाय नमो बलविकरणाय नमो बलाय नमो बलप्रमथनाय
नमस्सर्वभूतदमनाय नमो मनोन्मनाय नमः ॥ ऊरुभ्यां नमः ॥

अघोरेभ्योऽथ घोरेभ्यो घोरघोरतरेभ्यः ।
सर्वेभ्यस्सर्वशर्वेभ्यो नमस्ते अस्तु रुद्ररूपेभ्यः ॥ हृदयाय नमः ॥

तत्पुरुषाय विद्महे महादेवाय धीमहि । तन्नो रुद्रः प्रचोदयात् ॥ मुखाय नमः ॥

ईशानस्सर्व विद्याना - मीश्वरस्सर्व भूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मा शिवो मे

अस्तु सदाशिवोम्॥ हंसहंस। मूर्ध्ने नमः॥

अस्य श्री हंसगायत्री महा मंत्रस्य । अव्यक्त परब्रह्म ऋषिः। अनुष्टुप् छन्दः।

परमहंसो देवता॥ हंसां बीजम्। हंसीं शक्तिः। हंसूं कीलकम्॥

परमहंस प्रसाद सिद्ध्यर्थे जपे विनियोगः।

हंसां अंगुष्ठाभ्यां नमः। हंसीं तर्जनीभ्यां नमः। हंसूं मध्यमाभ्यां नमः।

हंसैं अनामिकाभ्यां नमः। हंसौं कनिष्ठिकाभ्यां नमः। हंसः करतल करपृष्ठाभ्यां नमः॥

हंसां हृदयाय नमः। हंसीं शिरसे स्वाहा। हंसूं शिखायै वषट्। हंसैं कवचाय ँ ।

हंसौं नेत्रत्रयाय वौषट् । हंसः अस्त्राय फट्। भूर्भुवस्सुवरों इति दिग्बन्ध॥

**ध्यानम्।**

गमागमस्थं गमनादिशून्यं चिद्रूपदीपं तिमिरापहारम्।

पश्यामि ते सर्व जनान्तरस्थं नमामि हंसं परामत्मरूपम्॥

देहो देवालय प्रोक्तो जीवो देवस्सनातनः।

त्यजेद् अज्ञान निर्माल्यम् सोऽहं भावेन पूजयेत्॥

हंस हंसाय विद्महे परमहंसाय धीमहि। तन्नो हंसः प्रचोदयात्॥ (3 times)

हंस हंसेति यो ब्रूयाद् धम्सो नाम सदाशिवः। एवं न्यासविधिं कृत्वा ततः संपुटमारभेत्॥

---

ॐ भूर्भुवस्सुवरों ।

लं । त्रातारमिंन्द्र मवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् । हुवे नु शक्रं
पुरहूतमिन्द्रग्ग् स्वस्ति नो मघवा धात्विन्द्रः ॥

लं भूर्भुवस्सुवः- इन्द्राय वज्रहस्ताय सुराधिपतय ऐरावतवाहनाय - सांगाय
सायुधाय सशक्ति परिवाराय - सर्वालंकारभूषिताय उमामहेश्वर पार्षदाय नमः ।
पूर्व दिग्भागे ललाटस्थाने इन्द्रः सुप्रीतो सुप्रस्न्नो वरदो भवतु ॥
ॐ भूर्भुवस्सुवरों ।

रं । त्वन्नो अग्ने वरुण्स्य विद्वान् देवस्य हेडोऽव यासिसीष्ठाः । यजिष्ठो
वह्नितमश्शोशुचानो विश्वा द्वेषाꣳसि प्रमुमग्ध्यस्मत ॥

रं भूर्भुवस्सुवः- अग्नये शक्तिहस्ताय तेजोऽधिपतयेऽजवाहनाय - सांगाय सायुधाय
सशक्ति परिवाराय - सर्वालंकारभूषिताय उमामहेश्वर पार्षदाय नमः ।
आग्नयेदिग्भागे नेत्रस्थाने अग्निः सुप्रीतो सुप्रस्न्नो वरदो भवतु ॥

ॐ भूर्भुवस्सुवरों ।

हं । सुगन्नः पन्थामभयं कृणोतु । यस्मिन्नक्षत्रे यम एति राजा । यस्मिन्नेन
मभ्यषिंचन्त देवाः । तदस्य चित्रꣳ हविषा यजाम ॥

हं भूर्भुवस्सुवः- यमाय दण्डहस्ताय धर्माधिपतये महिषवाहनाय - सांगाय सायुधाय सशक्ति परिवाराय - सर्वालंकारभूषिताय उमामहेश्वर पार्षदाय नमः।
दक्षिणदिग्भागे कर्णस्थाने यमः सुप्रीतो सुप्रस्न्नो वरदो भवतु ॥

ॐ भूर्भुवस्सुवरों ।

षं। असुन्वन्त मयजमान-मिच्छस्ते-नस्येत्यान् तस्क रस्यान् वेषि।
अन्य मस्मदिच्छ सा त इत्या नमो देवि निर्ऋते तुभ्यमस्तु ॥

षं भूर्भुवस्सुवः- निर्ऋतये खड्गहस्ताय रक्षोधिपतये नरवाहनाय - सांगाय सायुधाय सशक्ति परिवाराय - सर्वालंकारभूषिताय उमामहेश्वर पार्षदाय नमः।
नैर्ऋतदिग्भागे मुखस्थाने निर्ऋतिस्सुप्रीतो सुप्रस्न्नो वरदो भवतु ॥

ॐ भूर्भुवस्सुवरों ।

वं। तत्वा यामि ब्रह्मणा वन्दमानस्तदा शास्ते यजमानो हविर्भिः।
अहेडमानो वरुणेहबोध्युरुशꣳस मान आयुः प्रमोषीः ॥

वं भूर्भुवस्सुवः- वरुणाय पाशहस्ताय जलाधिपतये मकरवाहनाय - सांगाय सायुधाय सशक्ति परिवाराय - सर्वालंकारभूषिताय उमामहेश्वर पार्षदाय नमः।
पश्चिमदिग्भागे बाहुस्थाने वरुणः सुप्रीतो सुप्रस्न्नो वरदो भवतु ॥

ॐ भूर्भुवस्सुवरों ।

यं। आ नो नियुद्भिश् शतनीभि रध्वरम्। सहस्रिणीभि रुपयाहि यज्ञम्। वायो अस्मिन् हविषि मादयस्व। यूयं पात स्वस्तिभिस्सदा नः॥

यं भूर्भुवस्सुवः- वायवे सांकुशध्वजहस्ताय प्राणाधिपतये मृगवाहनाय - सांगाय सायुधाय सशक्ति परिवाराय - सर्वालंकारभूषिताय उमामहेश्वर पार्षदाय नमः। वायव्य दिग्भागे नासिकास्थाने वायुः सुप्रीतो सुप्रस्न्नो वरदो भवतु॥

ॐ भूर्भुवस्सुवरों ।

सं। वयग्ग् सोम व्रते तव। मनस्त नूषु बिभ्रतः। प्रजावन्तो अशीमहि। इन्द्राणी देवी सुभगा सुपत्नी॥

सं भूर्भुवस्सुवः- सोमाय अमृतकलशहस्ताय नक्षत्राधिपतये अश्ववाहनाय - सांगाय सायुधाय सशक्ति परिवाराय - सर्वालंकारभूषिताय उमामहेश्वर पार्षदाय नमः। उत्तरदिग्भागे हृदयस्थाने सोमः सुप्रीतो सुप्रस्न्नो वरदो भवतु॥

ॐ भूर्भुवस्सुवरों ।

शं। तमीशानं जगतस् तस्थु षस्पतिम्। धियं जिन्वमवसे हूमहे वयम्। पूषा नो यथा वेदसामसद् वृधे। रक्षिता पायुरदब्धस्स्वस्तये॥

शं भूर्भुवस्सुवः- ईशानाय त्रिशूलहस्ताय विद्याधिपतये (भूताधिपतये) वृषभवाहनाय - सांगाय सायुधाय सशक्ति परिवाराय - सर्वालंकारभूषिताय उमामहेश्वर पार्षदाय नमः। ईशानदिग्भागे नाभिस्थाने ईशानः सुप्रीतो सुप्रस्न्नो वरदो भवतु ॥

ॐ भूर्भुवस्सुवरों ।

खं। अस्मे रुद्रा मेहना पर्वतासो वृत्रहत्ये भर हूतौ सजोषाः।
यश्शंसते स्तुवते धायि पज्र इन्द्रज्येष्ठा अस्मान् अवन्तु देवाः॥

खं भूर्भुवस्सुवः- ब्रह्मणे पद्महस्ताय लोकाधिपतये हंसवाहनाय - सांगाय सायुधाय सशक्ति परिवाराय - सर्वालंकारभूषिताय उमामहेश्वर पार्षदाय नमः। ऊर्ध्वदिग्भागे मूर्धस्थाने ब्रह्मा सुप्रीतो सुप्रस्न्नो वरदो भवतु ॥

ॐ भूर्भुवस्सुवरों ।

ह्रीं। स्योना पृथिवि भवाऽनृक्षरा निवेशनि। यच्छानश्शर्म सप्रथाः।

ह्रीं भूर्भुवस्सुवः- विष्णवे चक्रहस्ताय नागाधिपतये गरुडवाहनाय - सांगाय सायुधाय सशक्ति परिवाराय - सर्वालंकारभूषिताय उमामहेश्वर पार्षदाय नमः। अधोदिग्भागे पादस्थाने विष्णुस्सुप्रीतो सुप्रस्न्नो वरदो भवतु ॥

---

ॐ भूर्भुवस्सुवः। ॐ अं। नमश्शंभवे च मयोभवे च नमः शंकराय च मयस्कराय
च नमः शिवाय च शिवतराय च ॥
विभूरसि प्रवाहणो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः॥
अं ॐ भूर्भुवस्सुवरोम्। शिखास्थाने रुद्राय नमः॥

ॐ भूर्भुवस्सुवः। ॐ आं। नमश्शंभवे च मयोभवे च नमः शंकराय च मयस्कराय
च नमः शिवाय च शिवतराय च ॥
वह्निरसि हव्यवाहनो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः॥
आं ॐ भूर्भुवस्सुवरोम्। शिरस्थाने रुद्राय नमः॥

ॐ भूर्भुवस्सुवः। ॐ इं। नमश्शंभवे च मयोभवे च नमः शंकराय च मयस्कराय
च नमः शिवाय च शिवतराय च ॥
श्वात्रोसि प्रचेता रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः॥
इं ॐ भूर्भुवस्सुवरोम्। मूर्धस्थाने रुद्राय नमः॥

ॐ भूर्भुवस्सुवः। ॐ ईं। नमश्शंभवे च मयोभवे च नमः शंकराय च मयस्कराय
च नमः शिवाय च शिवतराय च ॥
तुथोसि विश्ववेदा रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः॥
ईं ॐ भूर्भुवस्सुवरोम्। ललाटस्थाने रुद्राय नमः॥

ॐ भूर्भुवस्सुवः। ॐ उं। नमश्शंभवे च मयोभवे च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च॥

**उशिगसिकवी** रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः॥

उं ॐ भूर्भुवस्सुवरोम्। भ्रूस्थाने रुद्राय नमः॥

ॐ भूर्भुवस्सुवः। ॐ ऊं। नमश्शंभवे च मयोभवे च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च॥

**अंघारिरसि बंभारी** रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः॥

ऊं ॐ भूर्भुवस्सुवरोम्। मुखस्थाने रुद्राय नमः॥

ॐ भूर्भुवस्सुवः। ॐ ऋं *(r'm)*। नमश्शंभवे च मयोभवे च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च॥

**अवस्युरसि दुवस्वान्** रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः॥

ऋं *(r'm)*ॐ भूर्भुवस्सुवरोम्। कण्ठस्थाने रुद्राय नमः॥

ॐ भूर्भुवस्सुवः। ॐ ॠं *(reem)*। नमश्शंभवे च मयोभवे च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च॥

**शुन्ध्यूरसि मार्जालीयो** रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः॥

ॠं *(reem)*ॐ भूर्भुवस्सुवरोम्। बाहुस्थाने रुद्राय नमः॥

ॐ भूर्भुवस्सुवः । ॐ लृं *(l'm)* । नमश्शंभवे च मयोभवे च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥

**संम्राडसि कृशानू** रुौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः ॥

लृं *(l'm)* ॐ भूर्भुवस्सुवरोम् । ऊरुस्थाने रुद्राय नमः ॥

ॐ भूर्भुवस्सुवः । ॐ लॄं *(L'M)* । नमश्शंभवे च मयोभवे च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥

**परिषद्योसि पवमानो** रुौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः ॥

लॄं *(L'M)* ॐ भूर्भुवस्सुवरोम् । हृदयस्थाने रुद्राय नमः ॥

ॐ भूर्भुवस्सुवः । ॐ एं । नमश्शंभवे च मयोभवे च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥

**प्रतक्वासि नभस्वान्** रुौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः ॥

एं ॐ भूर्भुवस्सुवरोम् । नाभिस्थाने रुद्राय नमः ॥

ॐ भूर्भुवस्सुवः । ॐ ऐं । नमश्शंभवे च मयोभवे च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च ॥

**असंमृष्टोसि हव्यसूदो** रुौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः ॥

ऐं ॐ भूर्भुवस्सुवरोम् । कटिस्थाने रुद्राय नमः ॥

ॐ भूर्भुवस्सुवः। ॐ ॐ। नमश्शंभवे च मयोभवे च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च॥

ऋतधामासि सुवर्ज्योती रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः॥

ॐ ॐ भूर्भुवस्सुवरोम्। ऊरुस्थाने रुद्राय नमः॥

ॐ भूर्भुवस्सुवः। ॐ औं। नमश्शंभवे च मयोभवे च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च॥

ब्रह्मज्योतिरसि सुवर्धामा रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः॥

औं ॐ भूर्भुवस्सुवरोम्। जानुस्थाने रुद्राय नमः॥

ॐ भूर्भुवस्सुवः। ॐ अं। नमश्शंभवे च मयोभवे च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च॥

अजोस्येकपाद् रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः॥

अं ॐ भूर्भुवस्सुवरोम्। जंघास्थाने रुद्राय नमः॥

ॐ भूर्भुवस्सुवः। ॐ अः। नमश्शंभवे च मयोभवे च नमः शंकराय च मयस्कराय च नमः शिवाय च शिवतराय च॥

अहिरसि बुध्नियो रौद्रेणानीकेन पाहि माऽग्ने पिपृहि मा मा मा हिꣳसीः॥

अः ॐ भूर्भुवस्सुवरोम्। पादस्थाने रुद्राय नमः॥

त्वगस्थिगतैः सर्वपापैः प्रमुच्यते । सर्वभूतेष्व पराजितो भवति ।

ततो भूतप्रेत पिशाच ब्रह्मराक्षस यक्ष यमदूत शाकिनी डाकिनी सर्प श्वापद वृश्चिक

तस्करा द्युपद्रवा द्युपघाताः । सर्वे ज्वलन्तं पश्यन्तु । मां रक्षन्तु ।

यजमानं रक्षन्तु । सर्वान् महाजनानाम् रक्षन्तु ॥

---

मनो ज्योतिर्जुषता माज्यं विच्छिन्नं यज्ञꣳ समिमं दधातु ।

या इष्टा उषसो निम्रुचश्च तास् सन्दधामि हविषा घृतेन ॥ गुह्याय नमः ॥

अबोद् ध्यग्निस् समिधा जनानां प्रति धेनुमिवायती मुषासम् ।

यह्वा इव प्रवया मुज्जि हानाः प्रभानवस् सिस्रते नाकमच्छ ॥ नाभ्यै नमः ॥

अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयम् ।

अपाꣳ रेताꣳसि जिन्वति ॥ हृदयाय नमः ॥

मूर्धानं दिवो अरतिं पृथिव्या वैश्वा नरमृताय जातमग्निम् ।

कविꣳ सम्राज मतिथिं जनाना मासन्ना पात्रं जनयन्त देवाः ॥ कण्ठाय नमः ॥

मर्माणि ते वर्मभिश् छादयामि सोमस्त्वा राजाऽमृते नाभिवस्ताम् ।

उरोर् वरीयो वरिवस्ते अस्तु जयन्तं त्वा मनुमदन्तु देवाः ॥ मुखाय नमः ॥

जातवेदा यदि वा पावकोऽसि। वैश्वानरो यदि वा वैद्युतोऽसि। शंप्रजाभ्यो यजमानाय लोकम्। ऊर्जं पुष्टिं दददभ्याव वृत्स्व॥ शिरसे नमः॥

---

ब्रह्मात्मन्वदसृजत। तदकामयत। समात्मना पद्येयेति।
आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै दशमꣳ हूतः प्रत्यशृणोत्। स दश हूतोऽभवत्।
दश हूतो हवै नामैषः। तं वा एतं दश हूतꣳसन्तम्। दश होतेत्याचक्षते परोक्षेण।
परोक्षप्रिया इव हि देवाः॥

आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै सप्तमꣳहूतः प्रत्यशृणोत्। स सप्त हूतोऽभवत्।
सप्तहूतो हवै नामैषः। तं वा एतꣳ सप्त हूतꣳसन्तम्। सप्त होतेत्याचक्षते परोक्षेण।
परोक्षप्रिया इव हि देवाः॥

आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै षष्ठꣳ हूतः प्रत्यशृणोत्। स षड्ढूतोऽभवत्।
षड्ढूतो हवै नामैषः। तं वा एतꣳ षड्ढूतꣳसन्तम्। षडढोतेत्याचक्षते परोक्षेण।
परोक्षप्रिया इव हि देवाः॥

आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै पंचमꣳ हूतः प्रत्यशृणोत्। स पंच हूतोऽभवत्।
पंच हूतो हवै नामैषः। तं वा एतं पंच हूतꣳसन्तम्। पंच होतेत्याचक्षते परोक्षेण।
परोक्षप्रिया इव हि देवाः॥

आत्मन्नात्मन्नित्यामन्त्रयत। तस्मै चतुर्थ॰ हूतः प्रत्यशृणोत्। स चतुर् हूतोऽभवत्।
चतुर् हूतो हवै नामैषः। तं वा एतं चतुर् हूत॰सन्तम्। चतुर् होतेत्याचक्षते परोक्षेण।
परोक्षप्रिया इव हि देवाः॥

तमब्रवीत्। त्वं वै मे नेदिष्ठ॰ हूतः प्रत्यश्रौषीः। त्वयै नानारव्यातार इति।
तस्मान्नुहैना॰ श्चतुर्होतार इत्याचक्षते। तस्माच्छुश्रूषुः पुत्राणा॰ हृद्यतमः। नेदिष्ठो
हृद्यतमः। नेदिष्ठो ब्रह्मणो भवति। य एवं वेद॥ आत्मने नमः॥

---

येनेदं भूतं भुवनं भविष्यत् परिगृहीतम - मृतेन सर्वम्।
येन यज्ञस्तायते सप्तहोता तन्मे मनश्शिवसंकल्पमस्तु॥

येन कर्माणि प्रचरन्ति धीरा यतो वाचा मनसा चारुयन्ति।
यत्सम्मित मनुसंयन्ति प्राणिनस्तन्मे मनश्शिवसंकल्पमस्तु॥

येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्ति विदथेषु धीराः।
यदपूर्वं यक्षमन्तः प्रजानां तन्मे मनश्शिवसंकल्पमस्तु॥

यत्प्रज्ञानमुत चेतो धृतिश्च यज्ज्योति रन्तरमृतं प्रजासु।
यस्मान्न ऋते किंचन कर्म क्रियते तन्मे मनश्शिवसंकल्पमस्तु॥

सुषारथिरश्वानिव यन्मनुष्यान्नेनीयतेऽभीशुभिर् वाजिन इव ।
हृत्प्रष्ठिं यदजिरं जविष्ठं तन्मे मनश्शिवसंकल्पमस्तु ॥

यस्मिन् - नृचस्साम यजूꣳषि यस्मिन् प्रतिष्ठा रथनाभा विवाराः ।
यस्मिगूंस श्चित्तꣳ सर्वमोतं प्रजानां तन्मे मनश्शिवसंकल्पमस्तु ॥

यदत्र षष्ठं त्रिशतꣳसुवीरं यज्ञस्य गुह्यं नवनावमाय्यम् ।
दश पंच त्रिꣳशतं यत्परं च तन्मे मनश्शिवसंकल्पमस्तु ॥

यज्जाग्रतो दूरमुदैति दैवं तदु सुप्तस्य तथैवैति ।
दूरंगमं ज्योतिषां ज्योतिरेकं तन्मे मनश्शिवसंकल्पमस्तु ॥

येनेदं विश्वं जगतो बभूव ये देवापि महतो जातवेदाः ।
तदेवाग्निस्तमसो ज्योतिरेकं तन्मे मनश्शिवसंकल्पमस्तु ॥

येन द्यौः पृथिवी चान्तरिक्षं च ये पर्वताः प्रदिशो दिशश्च ।
येनेदं जगद्व्याप्तं प्रजानां तन्मे मनश्शिवसंकल्पमस्तु ॥

ये मनो हृदयं ये च देवा ये दिव्या आपो ये सूर्यरश्मिः ।
ते श्रोत्रे चक्षुषी संचरन्तं तन्मे मनश्शिवसंकल्पमस्तु ॥

अचिन्त्यं चा प्रमेयं च व्यक्ताव्यक्त परं च यत् ।
सूक्ष्मात् सूक्ष्मतरं ज्ञेयं तन्मे मनश्शिवसंकल्पमस्तु ॥

एका च दश शतं च सहस्रं चायुतं च नियुतं च प्रयुतं चार्बुदं च न्यर्बुदं च समुद्रश्च
मध्यं चान्तश्च परार्धश्च तन्मे मनश्शिवसंकल्पमस्तु ॥

ये पंच पंचादश शतꣳ सहस्र मयुतन्न्यर्बुदं च ।
ते अग्नि चित्येष्ट कास्तꣳ शरीरं तन्मे मनश्शिवसंकल्पमस्तु ॥

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
यस्य योनिं परिपश्यन्ति धीरास् तन्मे मनश्शिवसंकल्पमस्तु ॥

यस्येदं धीराः पुनन्ति कवयो ब्रह्माणमेतं त्वा वृणत इन्दुम् ।
स्थावरं जंगमं द्यौराकाशं तन्मे मनश्शिवसंकल्पमस्तु ॥

परात्परतरं चैव यत्पराच्चैव यत्परम् ।
यत्परात्परतो ज्ञेयं तन्मे मनश्शिवसंकल्पमस्तु ॥

परात्परतरो ब्रह्मा तत्परात्परतो हरिः ।
तत्परात्परतोऽधीशस्तन्मे मनश्शिवसंकल्पमस्तु ॥

या वेदादिषु गायत्री सर्वव्यापी महेश्वरी ।
ऋग्यजुस् सामाऽथर्वैश्च तन्मे मनश्शिवसंकल्पमस्तु ॥

यो वै देवं महादेवं प्रणवं परमेश्वरम् ।
यस्सर्वे सर्व वेदैश्च तन्मे मनश्शिवसंकल्पमस्तु ॥

प्रयतः प्रणवोंकारं प्रणवं पुरुषोत्तमम् ।
ओंकारं प्रणवात्मानं तन्मे मनश्शिवसंकल्पमस्तु ॥

योऽसौ सर्वेषु वेदेषु पठ्यते ह्यज ईश्वरः ।
अकायो निर्गुणोह्यात्मा तन्मे मनश्शिवसंकल्पमस्तु ॥

गोभिर्जुष्टं धनेन ह्यायुषा च बलेन च ।
प्रजया पशुभिः पुष्कराक्षं तन्मे मनश्शिवसंकल्पमस्तु ॥

कैलास शिखरे रम्ये शंकरस्य शिवालये ।
देवतास्तत्र मोदन्ते तन्मे मनश्शिवसंकल्पमस्तु ॥

त्र्यंबकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्यो-र्मुक्षीय माऽमृतात् तन्मे मनश्शिवसंकल्पमस्तु ॥

विश्वतश्चक्षरुत विश्वतो मुखो विश्वतो हस्त उत विश्वतस्पात्।
संबाहुभ्यान् नमति संपतत्रैर् द्यावा पृथिवी जनयन् देव एकस्तन्मे मनश्शिवसंकल्पमस्तु॥

चतुरो वेदान धीयीत सर्वशास्त्रमयं विदुः।
इतिहास पुराणानां तन्मे मनश्शिवसंकल्पमस्तु॥

मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्त-मुत मा न उक्षितम्।
मा नोऽवधीः पितरं मोत मातरं प्रिया मा नस्तनुवो रुद्र रीरिषस्तन्मे मनश्शिवसंकल्पमस्तु॥

मानस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः।
वीरान्मा नो रुद्र भामितोऽवधी-र्हविष्मन्तो नमसा विधेम ते तन्मे मनश्शिवसंकल्पमस्तु॥

ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्।
ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमस्तन्मे मनश्शिवसंकल्पमस्तु॥

कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे। वोचेमशन्तमꣳ हृदे।
सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु तन्मे मनश्शिवसंकल्पमस्तु॥

ब्रह्म जज्ञानं प्रथमं पुरस्ताद् विसीमतस् सुरुचो वेन आवः।
सबुध्निया उपमा अस्य विष्ठास् सतश्च योनि मसतश्च विवस् तन्मे मनश्शिवसंकल्पमस्तु॥

यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम तन्मे मनश्शिवसंकल्पमस्तु ॥

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य छायाऽमृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम तन्मे मनश्शिवसंकल्पमस्तु ॥

यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवनाऽऽविवेश तस्मै रुद्राय नमो अस्तु
तन्मे मनश्शिवसंकल्पमस्तु ॥

गधंद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीꣳ सर्वभूतानां तामिहोपह्वये श्रियम् तन्मे मनश्शिवसंकल्पमस्तु ॥

य इदꣳ शिवसंकल्पꣳ सदा ध्यायन्ति ब्राह्मणाः ।
ते परं मोक्षं गमिष्यन्ति तन्मे मनश्शिवसंकल्पमस्तु ॥

हृदयाय नमः ॥

---

सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वा ।
अत्यतिष्ठद्दशाङ्गुलम् । पुरुष एवेदꣳ सर्वम् । यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येषानः । यदन्नेनातिरोहति । एतावानस्य महिमा ।
अतो ज्यायाꣳश्च पूरुषः । पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि ।
त्रिपादूर्ध्व उदैत्पुरुषः । पादोऽस्येहाऽऽभवात्पुनः । ततो विश्वङ्व्यक्रामत् ।
साशनानशने अभि । तस्माद्विराडजायत । विराजो अधि पूरुषः ।
स जातो अत्यरिच्यत । पश्चाद्भूमिमथो पुरः । यत्पुरुषेण हविषा ।
देवा यज्ञमतन्वत । वसन्तो अस्यासीदाज्यम् । ग्रीष्म इध्मश्शरद्धविः ।
सप्तास्यासन्परिधयः । त्रिः सप्त समिधः कृताः । देवा यद्यज्ञं तन्वानाः ।
अबध्नन्पुरुषं पशुम् । तं यज्ञं बर्हिषि प्रौक्षन् । पुरुषं जातमग्रतः ।
तेन देवा अयजन्त । साध्या ऋषयश्च ये । तस्माद्यज्ञात्सर्वहुतः ।
संभृतं पृषदाज्यम् । पशूꣳस्ताꣳश्चक्रे वायव्यान् । आरण्यान्ग्राम्याश्च ये ।
तस्माद्यज्ञात्सर्वहुतः । ऋचः सामानि जज्ञिरे । छन्दाꣳसि जज्ञिरे तस्मात् ।
यजुस्तस्मादजायत । तस्मादश्वा अजायन्त । ये के चोभयादतः ।
गावो ह जज्ञिरे तस्मात् । तस्माज्जाता अजावयः । यत्पुरुषं व्यदधुः ।
कतिधा व्यकल्पयन् । मुखं किमस्य कौ बाहू । कावूरू पादावुच्येते ।
ब्राह्मणोऽस्य मुखमासीत् । बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः ।
पद्भ्याꣳ शूद्रो अजायत । चन्द्रमा मनसो जातः । चक्षोः सूर्यो अजायत ।
मुखादिन्द्रश्चाग्निश्च । प्राणाद्वायुरजायत । नाभ्या आसीदन्तरिक्षम् ।

शीर्ष्णो द्यौः समवर्तत । पद्भ्यां भूमिर्दिशः श्रोत्रात् । तथा लोकाꣳ अकल्पयन् ।
वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसस्तु पारे ।
सर्वाणि रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन्यदास्ते ।
धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्रः ।
तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते ।
यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् ।
ते ह नाकं महिमानः सचन्ते । यत्र पूर्वे साध्याः सन्ति देवाः ।

**शिरसे स्वाहा ॥**

अद्भ्यः संभूतः पृतिव्यै रसाच्च । विश्वकर्मणः समवर्तताधि ।
तस्य त्वष्टा विदधद्रूपमेति । तत्पुरुषस्य विश्वमाजानमग्रे ।
वेदाहमेतं पुरुषं महान्तम् । आदित्यवर्णं तमसः परस्तात् ।
तमेवं विद्वानमृत इह भवति । नान्यः पन्था विद्यतेयऽनाय ।
प्रजापतिश्चरति गर्भे अन्तः । अजायमानो बहुधा विजायते ।
तस्य धीराः परिजानन्ति योनिम् । मरीचीनां पदमिच्छन्ति वेदसः ॥
यो देवेभ्य आतपति । यो देवानां पुरोहितः । पूर्वो यो देवेभ्यो जातः ।
नमो रुचाय ब्राह्मये । रुचं ब्राह्मम् जनयन्तः । देवा अग्रे तदब्रुवन् ।
यस्त्वैवं ब्राह्मणो विद्यात् । तस्य देवा असन् वशे । ह्रीश्च ते लक्ष्मीश्च पत्न्यौ ।
अहोरात्रे पार्श्वे । नक्षत्राणि रूपम् । अश्विनौ व्यात्तम् । इष्टम् मनिषाण ।
अमुं मनिषाण । सर्वम् मनिषाण ॥ **शिखायै वषट् ॥**

आशुः शिशानो वृषभो न युध्मो घनाघनः, क्षोभणश्चर्षणीनाम् ।
संक्रन्दनोऽनिमिष एकवीरः शतꣳ सेना अजयत्साकमिन्द्रः ॥
संक्रन्दनेनानिमिषेण जिष्णुना युत्कारेण दुश्च्यवनेन धृष्णुना ।
तदिन्द्रेण जयत तत् सहध्वं युधो नर इषुहस्तेन वृष्णा ॥
स इषुहस्तैः स निषङ्गिभिर्वशी सग्ग् स्रष्टा स युध इन्द्रो गणेन ।
सꣳसृष्टजित् सोमपा बाहुशर्ध्यूर्ध्व धन्वा प्रतिहिताभिरस्ता ॥
बृहस्पते परि दीयारथेन रक्षोहाऽमित्राꣳ अपबाधमानः ।
प्रभञ्जन्त्सेनाः प्रमृणो युधा जयन्नस्माकमेध्यविता रथानाम् ॥
गोत्रभिदं गोविदं वज्रबाहुं जयन्तमज्म प्रमृणन्त मोजसा ।
इमꣳ सजाता अनु वीरयध्वमिन्द्रꣳ सखायोऽनु सꣳरभध्वम् ॥
बलविज्ञायः स्थविरः प्रवीरः सहस्वान् , वाजी सहमान उग्रः ।
अभिवीरो अभिसत्वा सहोजा जैत्रमिन्द्र रथमा तिष्ठ गोवित् ॥
अभिगोत्राणि सहसा गाहमानोऽदायो वीरश्शतमन्युरिन्द्रः ।
दुश्च्यवनः पृतनाषाडयुध्योऽस्माकꣳ सेना अवतु प्रयथ्सु ॥
इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः ।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रे ॥
इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुताꣳ शर्ध उग्रम् ।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात् ॥
अस्माकमिन्द्रस्समृतेषु ध्वजेष्वस्माकं या इषवस्ता जयन्तु ।

अस्माकं वीरा उत्तरे भवन्त्वस्मानु देवा अवता हवेषु ॥
उद्धर्षय मघवन्नायुधान्युथ्सत्वनां मामकानां महाꣳसि ।
उद् वृत्रहन् वाजिनां वाजिनान्युद्रथानां जयतामेतु घोषः ॥
उप प्रेत जयता नरः स्थिरा वस्सन्तु बाहवः ।
इन्द्रो वश्शर्म यच्छत्वनाधृष्या यथाऽसथ ॥
अवसृष्टा परा पत शरव्ये ब्रह्मसꣳशिता ।
गच्छामित्रान् प्रविश मैषां कं चनोच्छिषः ॥
मर्माणि ते वर्मभिश्छादयामि सोमस्त्वा राजाऽमृतेनाभिऽवस्ताम् ।
उरोर्वरीयो वरिवस्ते अस्तु जयन्तं त्वामनु मदन्तु देवाः ॥
यत्र बाणास्सम्पतन्ति कुमारा विशिखा इव ।
इन्द्रो नस्तत्र वृत्रहा विश्वाहा शर्म यच्छतु ॥

कवचाय हुं ।

---

प्रतिपूरुष मेककपालान् निर्वपत्येक मतिरिक्तं यावन्तो गृह्यास् स्मस्तेभ्यः कमकरं पशूनाꣳ शर्मासि शर्म यजमानस्य शर्म मे यच्छैक एव रुद्रो न द्वितीयाय तस्थ आखुस्ते रुद्र पशुस्तं जुषस्वैष ते रुद्र भागः सह स्वस्राम्बिकया तं जुषस्व भेषजं गवेऽश्वाय पुरुषाय भेषजमथो अस्मभ्यं भेषजꣳ सुभेषजं यथाऽसति ।

सुगं मेषाय मेष्या अवाम्ब रुद्र मदि मह्यव देवं त्र्यम्बकम् ।

यथा नः श्रेयसः करद्यथा नो वस्य सः करद्यथानः पशुमतः करद्यथा नो व्यवसाययात ।

त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय माऽमृतात् ।

एषते रुद्र भागस्तं जुषस्व तेनावसेन परो मूजवतोऽती ह्यवतत धन्वा पिनाकहस्तः कृत्तिवासाः ॥

प्रतिपूरुष मेककपालान् निर्वपति । जाता एव प्रजा रुद्रान् निरवदयते । एकमतिरिक्तम् । जनिष्यमाणा एव प्रजा रुद्रान् निरवदयते । एकक पाला भवन्ति । एकधैव रुद्रं निरवदयते । नाभि घारयति । यदभि घारयेत् । अन्तरवचारिणꣳ रुद्रं कुर्यात् । एकोल्मुकेन यन्ति । तद्धि रुद्रस्य भागधेयम् । इमां दिशं यन्ति । एषा वै रुद्रस्य दिक् । स्वायामेव दिशि रुद्रं निरवदयते । रुद्रो वा अप शुकाया आहुत्यै नातिष्ठत । असौ ते पशुरिति निर्दिशेद्यं द्विष्यात् । यमेव द्वेष्टि । तमस्मै पशुं निर्दिशति । यदि न द्विष्यात् । आखुस्ते पशुरिति ब्रूयात् । न ग्राम्यान् पशून् हिनस्ति । नारण्यान् । चतुष्पथे जुहोति । एष वा अग्नीनां पड्बीशो नाम । अग्निवत्येव जुहोति । मध्यमेन पर्णेन जुहोति । स्रुग्घ्येषा । अथो खलु । अन्तमे नैव होतव्यम् । अन्तत एव रुद्रं निरवदयते । एष ते रुद्र भागः सह स्वस्राऽम्बिकयेत्याह । शरद्वा अस्याम्बिका स्वसा । तया वा एष हिनस्ति । यꣳ हिनस्ति ।

तयैवैनꣳ सह शमयति । भेषजंगव इत्याह । यावन्त एव ग्राम्याः पशवः ।
तेभ्यो भेषजं करोति । अवाम्ब रुद्रमदि महीत्याह । आशिषमे वैतामा शास्ते ।
त्र्यम्बकं यजामह इत्याह । मृत्योर्मुक्षीय माऽमृतादिति वा वै तदाह । उत्किरन्ति ।
भगस्य लीप्सन्ते । मूते कृत्वा सजन्ति । यथा जनंयतेऽवसंकरोति । तादृगेव तत् ।
एष ते रुद्र भाग इत्याह निरवत्यै । अप्रतीक्षमायन्ति । अपः परिषिंचति ।
रुद्रस्यान्तर् हित्यै । प्रवा एतेऽस्माल् लेकाच् च्यवन्ते । ये त्र्यम्बकैश्चरन्ति ।
आदित्यं चरुं पुनरेत्य निर्वपति । इयं वा अदितिः । अस्यामेव प्रतितिष्ठन्ति ॥

नेत्रत्राय वौषट् ॥

---

त्वमग्ने रुद्रो असुरो महो दिवस्तवꣳ शर्धो मारुतं पृक्ष ईशिषे।
त्वं वातैर रुणैर्यासि शंगयस्त्वं पूषा विधतः पासि नुत्मना।
आ वो राजान मध्वरस्य रुद्रꣳ होतारꣳ सत्य यजꣳ रोदस्योः।
अग्निं पुरा तनयित्नो रचित्ताद्-धिरण्यरुप-मवसे कृणुध्वम्।
अग्निर्होता निषसादा यजी यानु पस्थे मातुः सुरभावु लोके।
युवा कविः पुरुनिष्ठः ऋतावा धर्ताकृष्टीना मुत मध्य इद्धः।
साध्वी मकर् देववी तिन्नो अद्य यज्ञस्य जिह्वाम विदाम गुह्याम्।
स आयुरागात् सुरभिर्वसानो भद्रामकर् देवहूतिं नो अद्य।
अक्रन्द दग्निस् तनयन् निव द्योः क्षामा रेरिहद् वीरुधस् समन्जन्न्।
सद्यो जज्ञानो विहिमिद्धो अरव्यदा रोदसी भानुना भात्यन्तः।
त्वे वसूनि पुर्वणीक होतर्दोषा वस्तो रेरिरे यज्ञियासः।
क्षामेव विश्वा भुवनानि यस्मिन्त्सꣳ सौभगानि दधिरे पावके।
तुभ्यं ता अंगिरस्तम विश्वास् सुक्षितयः पृथक्। अग्ने कामाय येमिरे।
अश्याम तं काममग्ने तवोत्यश् श्याम रयिꣳ रयिवस् सुवीरम्।
अश्याम वाज मभि वाजयन्तो श्याम द्युम्न मजरा जरन्ते।
श्रेष्ठं यविष्ठ भारताग्ने द्युमन्त माभर। वसो पुरुस्पृहꣳ रयिम्।
सश्वि तानस्तन् यतू रोचनस्था अजरेभि-र्नानदद्भि-र्यविष्ठः।
यः पावकः पुरुतमः पुरुणि पृथून्यग्नि रनुयाति भर्वन्।

आयुष्टे विश्वतो दध दयमग्नि र्वरेण्यः । पुनस्ते प्राण आयति परा यक्ष्मꣳ सुवामि ते ।

आयुर्दा अग्ने हविषो जुषाणो घृतप्रतीको घृतयो निरेधि ।

घृतं पीत्वा मधु चारु गव्यं पितेव पुत्रमभि रक्षतादिमम् ।

तस्मै ते प्रतिहर्य ते जातवेदो विचषर्णे । अग्ने जनामि सुष्टुतिम् ।

दिवस्परि प्रथमं जज्ञे अग्नि रस्मद् द्वितीयं परि जातवेदाः ।

तृतीयमप्सु नृमणा अजस्त्र मिन्धान एनं जरते स्वाधीः ।

शुचिः पावक वन्द्योऽग्ने बृहद्वि रोचसे । त्वं घृते भिराहुतः ।

दृशानो रुक्म उर्व्या व्यद्यौद् दुर्मर्षमायुः श्रिये रुचानः ।

अग्निरमृतो अभवद् वयोभिः यदेनं द्यौर जनयत् सुरेताः ।

आ यदिषे नृपतिं तेज आनट् शुचिरेतो निषिक्तं द्यौरभीके ।

अग्निः शर्ध मनवद्यं युवानग्ग स्वाधियं जनयत् सूदयच्च ।

स तेजीयसा मनसा त्वोत उत शिक्ष स्वपत्यस्य शिक्षोः ।

अग्ने रायो नृतमस्य प्रभूतौ भूयाम ते सुष्टु तयश्च वस्वः ।

अग्ने सहन्त-माभर द्युम्नस्य प्रासहा रयिम ।

विश्वायः चर्षणीरभ्यासा वाजेषु सासहत् ।

तमग्ने पृतनासहꣳ रयिꣳ सहस्व आभर ।

त्वꣳहि सत्यो अद्भुतो दाता वाजस्य गोमतः ।

उक्षान्नाय वशान्नाय सोमपृष्ठाय वेधसे । स्तोमैर्विधेमाग्नये ।

वद्माहि सूनो अस्यद्म सद्वा चक्रे अग्निर्जनुषा ज्मान्नम् ।

स त्वन्न ऊर्जसन ऊर्जं धाराजेवजे-रवृके क्षेष्यन्तः ।
अग्न आयूꣳषि पवस आसुवोर्ज मिषं च नः ।
आरे बाधस्व दुच्छुनाम् । अग्ने पवस्व स्वपा अस्मे वर्चस्सुविर्यम् ।
दधत् पौषꣳ रयिं मयि । अग्ने पावक रोचिषा मन्द्रया देवजिह्वया ।
आ देवान् वक्षि यक्षि च । स नः पावक दीदिवोऽग्ने देवाꣳ इहावह ।
उप यज्ञꣳ हविश्च नः । अग्निः शुचिवृततमः शुचिर्विप्रः शुचिः कविः ।
शुचीरोचत आहुतः । उदग्ने शुचयस्तव शुक्रा भ्राजन्त ईरते । तव ज्योतीग्गष्यर्चयः ॥

त्वमग्ने रुद्रो असुरो महो दिवः । त्वꣳ शर्द्धो मारुतं पृक्ष ईशिषे ।
त्वं वातैररुणैर्यासि शंगयः । त्वं पूषा विधतः पासि नुत्मना ।

देवा देवेषु श्रयद्ध्वम् । प्रथमा द्वितियेषु श्रयद्ध्वम् । द्वितियास् तृतीयेषु श्रयद्ध्वम् ।
तृतीयाश्चतुर्थेषु श्रयद्ध्वम् । चतुर्था पंचमेषु श्रयद्ध्वम् । पंचमा षष्ठेषु श्रयद्ध्वम् ।
षष्ठाः सप्तमेषु श्रयद्ध्वम् । सप्तमा अष्टमेषु श्रयद्ध्वम् । अष्टमा नवमेषु श्रयद्ध्वम् ।
नवमा दशमेषु श्रयध्वम् । दशमा एकादशेषु श्रयद्ध्वम् । एकादशा द्वादशेषु श्रयद्ध्वम् ।
द्वादशास् त्रयोदशेषु श्रयद्ध्वम् । त्रयोदशाश्चतुर्दशेषु श्रयद्ध्वम् ।
चर्तुदशाः पंचदशेषु श्रयद्ध्वम् । पंचदशा षोडशेषु श्रयद्ध्वम् ।
षोडशाः सप्तदशेषु श्रयद्ध्वम् । सप्तदशा अष्टादशेषु श्रयद्ध्वम् ।
अष्टादशा एकान्नविꣳशेषु श्रयद्ध्वम् । एकान्नविꣳशा विꣳशेषु श्रयद्ध्वम् ।
विꣳशा एकविꣳशेषु श्रयद्ध्वम् । एकविꣳशा द्वाविꣳशेषु श्रयद्ध्वम् ।

द्वाविꣳशास् त्रयो विꣳशेषु श्रयद्ध्वम्। त्रयोविꣳशाश्चतुर्विꣳशेषु श्रयद्ध्वम्।
चतुर्विꣳशाः पंचविꣳशेषु श्रयद्ध्वम्। पंचविꣳशाष् षड्विꣳशेषु श्रयद्ध्वम्।
षड्विꣳशास् सप्त विꣳशेषु श्रयद्ध्वम्। सप्तविꣳशा अष्टाविꣳशेषु श्रयद्ध्वम्।
अष्टाविꣳशा एकान्न त्रिꣳशेषु श्रयद्ध्वम्। एकान्नत्रिꣳशास् त्रिꣳशेषु श्रयद्ध्वम्।
त्रिꣳशा एकत्रिꣳशेषु श्रयद्ध्वम्। एकत्रिꣳशा द्वात्रिꣳशेषु श्रयद्ध्वम्।
द्वात्रिꣳशास् त्रयस्त्रिꣳशेषु श्रयद्ध्वम्। देवास्त्रि रेका दशास् त्रिस्त्र-यस्त्रिꣳशाः।
उत्तरे भवत। उत्तर वर्त्मान उत्तर सत्वानः। यत्काम इदं जुहोमि। तन्मे समृद्धयतां ।
वयग्ग्स्याम पतयो रयीणाम्। भूर्भुवस्वस्स्वाहा॥

अस्त्राय फट्॥

भूर्भुवस्सुवरोमिति दिग्बन्धः॥

---

हꣳसश् शुचिषद् -वसुरन्त-रिक्षसद्-धोता वेदिष-दतिथिर्-दुरोणसत्।
नृषद् वरसदृतसद् व्यो मसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥

प्रतद्विष्णुस् स्तवते वीर्याय। मृगो न भीमः कुचरो गिरिष्ठाः।
यस्योरुषु त्रिषु विक्रमणेषु। अधिक्षियन्ति भुवनानि विश्वा॥

त्र्यंबकं यजामहे सुगन्धिं पुष्टिवर्धनम्।
उर्वारुकमिव बन्धनान्मृत्यो-र्मुक्षीय माऽमृतात्॥

तत्सवितुर्वृणीमहे । वयं देवस्य भोजनम् । श्रेष्ठꣳ सर्वधातमम् । तुरंभगस्य धीमहि ॥

विष्णुर्योनिं कल्पयतु । त्वष्टा रुपाणि पिꣳशतु । आसि चतु प्रजापतिः ।
धाता गर्भं दधातु मे ॥

---

8 Sashtaanga Namaskaras to be performed after chanting each of the following 8 mantras

1) ॐ । हिरण्यगर्भस् समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
सदाधार पृथिवीं द्यामुतेमां कस्मै देवाय हविषा विधेम ॥
ॐ उमामहेश्वराभ्यां नमः ॥

2) ॐ । यः प्राणतो निमिषतो महित्वैक इद्राजा जगतो बभूव ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥
ॐ । उमामहेश्वराभ्यां नमः ॥

3) ॐ । ब्रह्म जज्ञानं प्रथमं पुरस्ताद् विसीमतस् सुरुचो वेन आवः ।
सबुध्निया उपमा अस्य विष्ठास् सतश्च योनि मसतश्च विवः ।
ॐ उमामहेश्वराभ्यां नमः ॥

4) ॐ । मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् । पिपृतान्नो भरीमभिः ॥
ॐ उमामहेश्वराभ्यां नमः ॥

5) ॐ । उपश्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत् ।
स दुन्दुभे सजूरिन्द्रेण देवैर् दूराद्दवीयो अपसेध शत्रून् ॥
ॐ उमामहेश्वराभ्यां नमः ॥

6) ॐ । अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस् मज् जुहुराणमेनो भूयिष्ठान्ते नमउक्तिं विधेम ॥
ॐ उमामहेश्वराभ्यां नमः ॥

7) ॐ । या ते अग्ने रुद्रिया तनूस्तया नः पाहि तस्यास्ते स्वाहा ।
ॐ उमामहेश्वराभ्यां नमः ॥

8 ) ॐ । इमं यमप्रस्तरमाहि सीदाऽङ्गिरोभिः पितृभिस्संविदानः ।
आत्वा मन्त्राः कविशस्ता वहन्त्वेना राजन् हविषा मादयस्व ॥
ॐ उमामहेश्वराभ्यां नमः ॥

---